## ।। अष्टमोऽध्यायः ।।

धर्माचरणवर्णनम्।

गवां बन्धनयोक्त्रेतु भवेन्मृत्युरकामतः ।

अकामात् कृतपापस्य प्रायश्चित्तं कथं भवेत् ।। १ ।।

वेदवेदाङ्गविदुषां धर्मशास्त्रं विजानताम्।

स्वकर्मरतविप्राणां स्वकं पापं निवेदयेत्।। २ ।।

अत ऊर्ध्वं प्रवक्ष्यामि उपस्थानस्य लक्षणम्।

उपस्थितो हि न्यायेन व्रतदेशनमर्हति ।। ३ ।।

सद्योनिशंसये पापे न भुञ्जीतानुपस्थितः ।

भुञ्जानो वर्द्धयेत् पापं पर्शद्यत्र न विद्यते ।। ४ ।।

शंसये तु न भोक्तव्यं यावत् कार्यविनिश्चयः ।

प्रमादश्च न कर्त्तव्यो यथैवाशंसयस्तथा ।। ५ ।।

कृत्वा पापं न गूहेत गुह्यमानं विवर्द्धते ।

स्वल्पं बाथ प्रभूतं वा धर्मविद्भ्यो निवेदयेत्।। ६ ।।

ते हि पापे कृते वेद्या हन्तारश्चैव पाप्मनाम्।

व्याधितस्य यथा वैद्या बुद्धिमन्तो रुजापहाः ।। ७ ।।

प्रायश्चित्ते समुत्पन्नें ह्रीमान् सत्यपरायणः ।

मुहुरार्जवसम्पन्नः शुद्धिं गच्छेत मानवः ।। ८ ।।

सचैलं वाग्यतः स्नात्वा क्लिन्नवासाः समाहितः ।

क्षत्रियो वाथ वैश्यो वा ततः पर्षद माव्रजेत्।। ९ ।।

उपस्थाय ततः शीघ्रमार्त्तिमान् धरणी व्रजेत् ।
गात्रैश्च शिरसा चैव न च किञ्चिदुदाहरेत् ॥ १० ॥
सावित्रयाश्चापि गायत्र्याः सन्ध्योपारत्यग्निकार्ययोः ।
अज्ञानात् कृषिकर्त्तारो ब्राह्मणा नामधारकाः ॥ ११ ॥
अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् ।
सहस्रशः समेतानां परिषत्त्वं न विद्यते ॥ १२ ॥
यद्वदन्ति तमोमूढा मूर्खा धर्ममतद्विदः ।
तत्पापं शतधा भूत्वा तद्वक्तुरधि गच्छति ॥ १३ ॥
अज्ञात्वा धर्मशास्त्राणि प्रायश्चित्तं ददाति यः ।
प्रायश्चित्तीभवेत् पूतः किल्विषं परिषद्व्रजेत् ॥ १४ ॥
चत्वारो वा त्रयो वापि यं ब्रूयुर्वेदपारगाः ।
स धर्म इति विज्ञेयो नेतरैस्तु सहस्रशः ॥ १५ ॥
प्रमाणमार्गं मार्गन्तो ये धर्मं प्रवदन्ति वै ।
तेषामुद्विजते पापं सम्भूतगुणवादिनाम् ॥ १६ ॥
यथाश्मनि स्थितं तोयं मारुतार्केण शुद्ध्यति ।
एवं परिष दादेशान्नाशयेदेव दुष्कृतम् ॥ १७ ॥
नैव गच्छति कर्त्तारं नैव गच्छति पर्षदम् ।
मारुतार्कादिसंयोगात् पापं नश्यति तोयवत् ॥ १८ ॥
अनाहिताग्नयो येऽन्ये वेदवेदाङ्गपारगाः ।
पञ्च त्रयो वा धर्म्मज्ञाः परिषत् सा प्रकीर्त्तिता ॥ १९ ॥
मुनीनामात्मविद्यानां द्विजानां यज्ञयाजिनाम् ।
वेदव्रतेषु स्नातानामेकोऽपि परिषद्भवेत् ॥ २० ॥
पञ्च पूर्वं मया प्रोक्तस्तेषाञ्चैव स्वसम्भवे ।
स्ववृत्तिपरितुष्टा ये परिषत् सा प्रकीर्तिता ॥ २१ ॥

अत ऊर्ध्वन्तु ये विप्राः केवलं नामधारकाः ।
परिषत्त्वं न तेषां वै सहस्रगुणितेष्वपि ॥ २२ ॥

यथा काष्ठमयो हस्ती यथा चर्ममयो मृगः ।
ब्राह्मणस्त्वनधीयानास्त्रयस्ते नामधारकाः ॥ २३ ॥

ग्रामस्थानं यथा शून्यं यथा कूपस्तु निर्जलः ।
यथा हूतमनग्नौ च अमन्त्रो ब्राह्मणस्तथा ॥ २४ ॥

यथा षण्डोऽफलः स्त्रीषु यथा गौरूषराफला ।
यथा चाज्ञेऽफलं दानं यथा विप्रोऽनृचोऽफलः ॥ २५ ॥

चित्रं कर्म यथानेकैरङ्गैरुन्मील्यते शनैः ।
ब्राह्मण्यमपि तद्वत् स्यात् संस्कारैर्विधिपूर्वकः ॥ २६ ॥

प्रायश्चित्तं प्रयच्छन्ति ये द्विजा नामधारकाः ।
ते द्विजा पापकर्माणः समेता नरकं ययुः ॥ २७ ॥

ये पठन्ति द्विजा वेदं पञ्चयज्ञरताश्च ये ।
त्रैलोक्यं धारयन्त्येते पञ्चेन्द्रियरताश्रयाः ॥ २८ ॥

सम्प्रणीतः श्मशानेषु दीप्तोऽग्निः सर्वभक्षकः ।
तथैव ज्ञानवान् विप्रः सर्वभक्षश्च दैवतम् ॥ २९ ॥

अमेध्यानि च सर्वाणि प्रक्षिपन्तयुदके यथा ।
तथैव किल्विषं सर्वं प्रक्षेप्तव्यं द्विजेऽमले ॥ ३० ॥

गायत्रीरहितो विप्रः शूद्रादप्यशुचिर्भवेत् ।
गायत्रीब्रह्मातत्त्वज्ञाः संपूज्यन्ते द्वितोत्तमाः ॥ ३१ ॥

दुःशीलोऽपि द्विजः पूज्यो न शूद्रो विजितेन्द्रियः ।
कः परीत्यज्य दुष्टाङ्गां दुहेच्छ्वीलवती खरीम् ॥ ३२ ॥

धर्मशास्त्ररथारूढा वेदखड्गधरा द्विजाः ।
क्रीड़ार्थमपि यद्ब्रूयुः स धर्मः परमःस्मृतः ॥ ३३ ॥

चातुर्वेद्यो विकल्पी च अङ्गविद्धर्मपालकः ।
प्रपञ्चाश्रमिणो मुख्याः परिषत् स्युर्दशावराः ॥ ३४ ॥
राज्ञाश्चानुमते चैव प्रायश्चित्तं द्विजो वदेत् ।
स्वयमेव न वक्तव्या प्रायश्चित्तस्य निष्कृतिः ॥ ३५ ॥
ब्राह्मणांश्च व्यतिक्रम्य राजा यत् कर्त्तुमिच्छति ।
तत्पापं शतधा भूत्वा राजानमुपगच्छति ॥ ३६ ॥
प्रायश्चित्तं सदा दद्याद्देवतायतनाग्रतः ।
आत्मानं पावयेत् पश्चान्जपन् वै वेदमातरम् ॥ ३७ ॥
सशिखं वपनं कृत्वा त्रिसन्ध्यमवगाहनम् ।
गवां गोष्ठे वसेद्रात्रौ दिवा ताः समनुव्रजेत् ॥ ३८ ॥
उष्णे वर्षति शीते वा मारुते वाति वा भृशम् ।
न कुर्व्वीतात्मनस्त्राणं गोरकृत्वा तु शक्तितः ॥ ३९ ॥
आत्मनो यदि वान्येषां गृहे क्षेत्रेऽथवा खले ।
भक्षयन्तीं न कथयेत् पिबन्तश्चैव वत्सकम् ॥ ४० ॥
पिवन्तीषु पिबेत्तोयं सम्बिशन्तीषु संविशेत् ।
पतितां पङ्कमग्नां वा सर्वप्राणैः समुद्धरेत् ॥ ४१ ॥
ब्राह्मणार्थे गवार्थे वा यस्तु प्राणान् परित्यजेत् ।
मुच्यते ब्रह्महत्याद्यैर्गोप्ता गोब्राह्मणस्य च ॥ ४२ ॥
गोबधस्यानुरूपेण प्राजापत्यं विनिर्दिर्द्दशेत् ।
प्राजापत्यन्तु यत्कृच्छ्रं विभजेत्तचतुर्विधम् ॥ ४३ ॥
एकाहमेकभक्ताशी एकाहं नक्तभोजनः ।
अयाचिताश्येकमहरेकाहं मारुताशनः ॥ ४४ ॥
दिनद्वयं चैकभक्तोद्विदिनं नक्तभोजनः ।
दिनद्वयमयाची स्याद्द्विदिनं मारुताशनः ॥ ४५ ॥
त्रिदिनच्चैकभक्ताशी त्रिदिनं नक्तभोजनः ।

दिनत्रयमयाची स्यात्रिदिनं मारुताशनः ॥ ४६ ॥

चतुरहन्त्वेकभक्ताशी चतुरहं नक्तभोजनः ।

चतुर्दिनमयाची स्याच्चतुरहं मारुताशनः ॥ ४७ ॥

प्राश्चित्ते ततश्चीर्णे कुर्य्याद्ब्राह्मणभोजनम् ।

विप्राय दक्षिणां दद्यात् पवित्राणि जपेद्द्विजः ॥ ४८ ॥

ब्राह्मणान् भोजयित्वा तु गोघ्नः शुद्धो न शंसयः ॥ ४९ ॥

इति पाराशरे धर्मशास्त्रेऽष्टमोऽध्यायः ।

## ।। नवमोऽध्यायः ।।

गोसेवोपदेशवर्णनम् ।

गवां संरक्षणार्थाय न दुष्येद्रोधबन्धयोः ।
तद्बधन्तु न तं विद्यात् कामात् कामकृतन्तथा ।। १ ।।
अङ्गुष्ठमात्रः स्थूलो वा बाहुमात्रः प्रमाणतः ।
आर्द्रस्तु सपलाशश्च दण्ड इत्यभिधीयते ।। २ ।।
दण्डादूर्द्ध्वं यदन्येन प्रहरेद्वा निपातयेत् ।
प्रायश्चित्तं चरेत् प्रोक्तं द्विगुणं गोव्रतश्चरेत् ।। ३ ।।
रोधबन्धनयोक्त्वाणि घातनञ्च चतुर्विधम् ।
एकपादञ्चरेद्रोधे द्विपादं बन्धने चरेत् ।। ४ ।।
योक्तत्रेषु पादहीनं स्याञ्चरेत् सर्व निपातने ।
गोचारे च गृहे वापि दुर्गेष्वपि समेष्वपि ।। ५ ।।
नदीष्वपि समुद्रेषु खातेऽप्यथ दरीमुखे ।
दग्धदेशे स्थिताः गावः स्तम्भनाद्रोध उच्यते ।। ६ ।।
योक्त्रदामकडोरैश्च घण्टाभरणभूषणैः ।
गृहे वापि बने वापि बद्धा स्याद्गौर्मृता यदि ।। ७ ।।
तदेव बन्धनं विद्यात् कामाकामकृतञ्च यत् ।
मृल्लेखे शकटे पंक्तो भारे वा पीड़ितो नरैः ।। ८ ।।
गोपतिर्मृत्युमाप्नोति योक्त्रो भवति तदवधः ।
मत्तः प्रमत्त उन्मत्तश्चेतनो वाप्यचेतनः ।। ९ ।।

कामाकामकृतक्रोधोदण्डैर्हन्यदथोपलैः ।
प्रहता वा मृता वापि तद्धि हेतुर्निपातने ॥ १० ॥
मूर्च्छितः पतितो वापि दण्डेनाभिहतः स तु ।
उत्थितस्तु यदा गच्छेत् पञ्च सप्त दशैव वा ॥ ११ ॥
ग्रासं वा यदि गृहणीयात्तोयं वापि पिवेद्यदि ।
पूर्वव्याध्युपसृष्टश्चेत् प्रायश्चित्तं न विद्यते ॥ १२ ॥
पिण्डस्थे पादमेकन्तु द्वौ पादौ गर्भसम्मिते ।
पादोनं व्रतमुद्दिष्टं हत्वा गर्भमचेतनम् ॥ १३ ॥
पादेऽङ्गरोमवपनं द्विपादे श्मश्रुणोऽपि च ।
त्रिपादे तु शिखावर्जं सशिखन्तु निपातने ॥ १४ ॥
पादे वस्त्रयुगञ्चैव द्विपदे कांस्यभाजनम् ।
पादोने गोवृषं दद्याच्चतुर्थे गोद्वयं स्मृतम् ॥ १५ ॥
निष्पन्नसर्वगात्रन्तु दृश्यते वा सचेतनम् ।
अङ्गप्रत्यङ्गसम्पन्ने द्विगुणं गोव्रतं चरेत् ॥ १६ ॥
पाषाणे नैव दण्डेन गावो येनाभिघातिताः ।
श्रृङ्गभृङ्गे चरेत् पादं द्वौ पादौ तेन यातने ॥ १७ ॥
लाङ्गूले कृच्छ्रपादन्तु द्वौ पादावस्थिभञ्जने ।
त्रिपादञ्चैव कर्णे तु चरेत् सर्व निपातने ॥ १८ ॥
श्रृङ्गभृङ्गेऽस्थिभङ्गे च कटिभङ्गे तथैव च ।
यदि जीवति षणमासान् प्रायश्चित्तं न विद्यते ॥ १९ ॥
व्रणभङ्गे च कर्त्तव्यः स्नेहाभ्यङ्गस्तु पाणिना ।
यवसञ्चापहर्त्तव्वयो यावदद्दढबलो भवेत् ॥ २० ॥
यावत्सम्पूर्णसर्वाङ्गस्तावत्तं पोषयेन्नरः ।
गोरूपं ब्राह्मणस्यागने नमस्कृत्य विवर्जयेत् ॥ २१ ॥
यद्यसम्पूर्णसर्वाङ्गो हीनदेहो भवेत्तदा ।

गोघातकस्य तस्यार्द्धं प्रायश्चित्तं विनिदिर्द्दशेत् ॥ २२ ॥
काष्ठलोष्ट्रकपाषाणैः शस्त्रेणैवोद्धतो बलात् ।
व्यापादयति यो गान्तु तस्य शुद्धि विनिदिर्द्दशेत् ॥ २३ ॥
चरेत् सान्तपनं काष्ठे प्राजापत्यन्तु लोष्ट्रके ।
तप्तकृच्छन्तु पाषाणे शस्त्रे चैवातिकृच्छ्रकम् ॥ २४ ॥
पञ्च सान्तपने गावः प्राजापत्ये तथा त्रयः ।
तप्तकृच्छ्रे भवेन्त्यष्टावतिकृच्छ्रे त्रयोदश ॥ २५ ॥
प्रमापणे प्राणभृतां दद्यात्तत्प्रतिरूपकम् ।
तस्यानुरूपं मूल्यं वा दद्यादित्यब्रवीन्मनुः ॥ २६ ॥
अन्यत्राङ्कनलक्ष्मभ्यां वाहने मोहने तथा ।
सायं संयमनार्थः तु न दुष्येद्रोधबन्धयोः ॥ २७ ॥
अतिदाहेऽतिवाहे च नासिकाभेदने तथा ।
नदीपर्वतसञ्चारे प्रायश्चित्तं विनिर्दिशेत् ॥ २८ ॥
अतिदाहे चरेत्पादं द्वौ पादौ वाहने चरेत् ।
नासिके पादहीनं तु चरेत्सर्वं निपातने ॥ २९ ॥
दहनाञ्च विपद्येत अबद्धो वापि यन्त्रितः ।
उक्तं पाराशरेणैव ह्येकपादं यथाविधि ॥ ३० ॥
रोधबन्धनयोक्त्रञ्च भारः प्रहरणन्तथा ।
दुर्गप्रेरणयोक्त्रश्च निमित्तानि वधस्य षट् ॥ ३१ ॥
बन्धप्राशसुगुप्ताङ्गो म्रियते यदि गोपशुः ।
भवने तत्त्व नाशस्थ पापं कृच्छ्रार्द्धमर्हति ॥ ३२ ॥
न नारिकेलैर्नच शाणबालै-
र्नचापि मौञ्जेन च बन्धनश्रृङ्खलैः ।
एतैस्तु गावो न निबन्धनीया-
बद्धवातु तिष्ठेत् परशुंगृहीत्वा ॥ ३३ ॥

कुशैः काशैश्च बध्नीयाद्गोपशुं दक्षिणामुखम् ।
पाशलग्नादिदग्धेषु प्रायश्चित्तं न विद्यते ॥ ३४ ॥
यदि तत्र भवेत् काण्डं प्रायश्चित्तं कथं भवेत् ।
जपित्वा पावनीं देवीं मुच्यते तत्र किल्विषात् ॥ ३५ ॥
प्रेरयन् कूपवापीषु वृक्षच्छेदेषु पातयन् ।
गवाशनेषु विक्रीणंस्ततः प्राप्नोति गोबधम् ॥ ३६ ॥
आराधितस्तु यः कश्चिद्भिन्नकक्षो यदा भवेत् ।
श्रवणं हृदयं भिन्नं मग्नौ वा कूटसङ्कटे ॥ ३७ ॥
कूपादुत्क्रमणे चैव मग्नो वा ग्रीवपादयोः ।
स एव म्रियते तत्र त्रीन पादांस्तु समाचरेत् ॥ ३८ ॥
कूपखाते तटीबन्धे नदीबन्धे प्रपासु च ।
पानीयेषु विपन्नानां प्रायश्चित्तं न विद्यते ॥ ३९ ॥
कूपखाते तटीखाते दीर्घखाते तथैव च ।
अन्येषु धर्मपातेषु प्रायश्चित्तं न विद्यते ॥ ४० ॥
वेश्मद्वारे निवासेषु यो नरः खातमिच्छति ।
स्वकार्यगृहखातेषु प्रायश्चित्तं विनिर्दिशेत् ॥ ४१ ॥
निशि बन्धनिरुद्धेषु सर्पव्याघ्रहतेषु च ।
अग्निविद्युद्विपन्नानां प्रायश्चित्तं न विद्यते ॥ ४२ ॥
ग्रामघाते शरौघेण वेश्मबन्धनिपातने ।
अतिवृष्टिहतानाञ्च प्रायश्चित्तं न विद्यते ॥ ४३ ॥
संग्रामे प्रहतानाञ्च ये दग्धा वेश्मकेषु च ।
दावाग्नि ग्रामघाते वा प्रायश्चित्तं च विद्यते ॥ ४४ ॥
यन्त्रिता गौश्चिकित्सार्थं मूढगर्भविमोचने ।
यत्ने कृते विपद्येत प्रायश्चित्तं न विद्यते ॥ ४५ ॥

व्यापन्नानां बहूनाञ्च बन्धने रोधनेऽपिवा।
भिषग्मिथ्याप्रचारे च प्रायश्चितं विनिर्दिशेत्॥ ४६ ॥
गोवृषाणां विपत्तौ च यावन्तः प्रेक्षका जनाः।
न वारयन्ति तां तेषां सर्वेषां पातकं भवेत्॥ ४७ ॥
एको हतोयैर्बहुभिः समेतै-
र्नज्ञायते यस्य हतोऽभिधानात्।
दिव्येन तेषामुपलभ्य हन्ता
निवर्त्तनीयो नृपसन्नियुक्तैः ॥ ४८ ॥
एका चेद्बहुभिः कापि दैवाद्व्यापादिता भवेत्।
पादं पादञ्च हत्यायाश्चरेयुस्ते पृथक् पृथक्॥ ४९ ॥
हतेषु रुधिरं दृश्यं व्याधिग्रस्तः कृशो भवेत्।
नाना भवति दृष्टेषु एवमन्वेषणं भवेत्॥ ५० ॥
मनुना चैवमेकेन सर्वशास्त्राणि जानता।
प्रायश्चित्तन्तु तेनोक्तं गोपु चान्द्रायणं चरेत्॥ ५१ ॥
केशानां रक्षणार्थाय द्विगुणं गोव्रतं चरेत्।
द्विगुणे व्रत आदिष्टे दक्षिणा द्विगुणा भवेत्॥ ५२ ॥
राजा वा राजपुत्रो वा ब्राह्मणो वा बहुश्रुतः।
अकृत्वा वपनं तस्य प्रायश्चित्तं विनिर्दिशेत्॥ ५३ ॥
यस्य न द्विगुणं दानं केशञ्च परिरक्षितः।
तत्पापं तस्य तिष्ठेत वक्ता च नरकं व्रजेत्॥ ५४ ॥
यत्किञ्चित् क्रियते पापं सर्वकेशेषु तिष्ठति।
सर्वान् केशान् समुद्धृत्य च्छेदयेदङ्गुलिद्वयम्॥ ५५ ॥
एवं नारीकुमारीणां शिरसो मुण्डनं स्मृतम्।
न स्त्रियाः केशवपनं न दूरे शयनाशनम्॥ ५६ ॥

न च गोष्ठे वसेद्रात्रौ न दिवा गा अनुव्रजेत् ।
नदीषु सङ्गमे चैव अरण्येषु विशेषतः ॥ ५७ ॥
न स्त्रीणामजिनं वासो व्रतमेवं समाचरेत् ।
त्रिसन्ध्यं स्नानमित्युक्तं सुराणामर्चनं तथा ॥ ५८ ॥
बन्धुमद्ये व्रतं तासां कृच्छ्रचान्द्रायणादिकम् ।
गृहेषु नियतं तिष्ठेच्छुचिर्नियममाचरेत् ॥ ५९ ॥
इह यो गोबधं कृत्वा प्रच्छादयितुमिच्छति ।
स याति नरकं घीरं कालसूत्रमसंशयम् ॥ ६० ॥
विमुक्तो नरकात्तस्मान्मर्त्यलोके प्रजायते ।
क्लीवो दुःखी च कुष्ठी च सप्त जन्मानि वै नरः ॥ ६१ ॥
तस्मात् प्रकाशयेत् पापं स्वधर्म सततं चरेत् ।
स्त्रीवालभृत्यगोविप्रेष्वति कोपं विवर्जयेत् ॥ ६२ ॥

इति पाराशरे धर्मशास्त्रे नवमोऽध्यायः ।

## ॥ दशमोऽध्यायः ॥

अगम्यागमनप्रायश्चित्तवर्णनम्।

चातुर्वर्ण्यस्य सर्वत्र हीयं प्रोक्ता तु निष्कृतिः ।
अगम्यागमने चैव शुद्धौ चान्द्रायणञ्चरत् ॥ १ ॥
एकैकं ह्रासयेत् पिण्डं कृष्णे शुक्ले च वर्द्धयेत्।
अमावास्यां न भुञ्जीत एष चान्द्रायणो विधिः ॥ २ ॥
कुक्कुटाण्डप्रमाणन्तु ग्रासञ्च परिकल्पयेत्।
अन्यथा भावदुष्टस्य न धर्मो नैव शुद्धयति ॥ ३ ॥
प्रायश्चित्ते ततश्चीर्णे कुर्य्याद्ब्राह्मणभोजनम्।
गोद्वयं वस्त्रयुग्मञ्च दद्याद्विप्रेषु दक्षिणाम् ॥ ४ ॥
चाण्डालीञ्च श्वपाकीञ्च ह्यभिगच्छति यो द्विजः ।
त्रिरात्रमुपवासी स्याद्विप्राणामनुशासनात् ॥ ५ ॥
सशिखं वपनं कुर्यात् प्राजापत्यत्रयञ्चरेत्।
ब्रह्मकूर्च्चं ततः कृत्वा कुर्य्याद्ब्राह्मणतर्पणम् ॥ ६ ॥
गायत्रीञ्च जपेन्नित्यं दद्याद्गोमिथुनद्वयम्।
विप्राय दक्षिणां दद्याच्छुद्धिमाप्नोत्यसंशयम् ॥ ७ ॥
क्षत्रियश्चापि वैश्यो वा चाण्डालीं गच्छतो यदि।
प्राजापत्यद्वयं कुर्य्याद्दद्याद्गोमिथुनन्तथा ॥ ८ ॥
श्वपाकीमथ चाण्डालीं शूद्रो वै यदि गच्छति।
प्राजापत्यं चरेत्कृच्छ्रं दद्याद्गोमिथुनन्तथा ॥ ९ ॥

मातरं यदि गच्छेत भगिनीं पुत्रिकान्तथा।
एतास्तु मोहितो गत्वा त्रीन् कृच्छ्रांस्तु समाचरेत्॥ १० ॥
चान्द्रायणत्रयं कुर्य्याच्छिश्नछेदेन शुद्धयति।
मातृस्वसृगमे चैव आत्मभेदनिदर्शनम्॥ ११ ॥
अज्ञानात्तान्तु यो गच्छेत् कुर्य्याश्चान्द्रायणाद्वयम्।
दशगोमिथुनन्दद्यच्छुद्धिं पाराशरोऽब्रवीत्॥ १२ ॥
पितृदारान् समारुह्य मातुराप्ताश्च भ्रातृजाम्।
गुरुपत्नीं स्नुषाञ्चैव भ्रातृभार्य्यां तथैव च॥ १३ ॥
मातुलानीं सगोत्राञ्च प्राजापत्यत्रयञ्चरेत्।
गोद्वयं दक्षिणां दत्त्वा शुद्धयते नात्र संशयः॥ १४ ॥
पशुवेश्यादिगमने महिष्युष्ट्रीकपीस्तथा।
खरीञ्च शूकरीं गत्वा प्राजापत्यं समाचरेत्॥ १५ ॥
गोगामी च त्रिरात्रेण गामेकं ब्राह्मणे ददत्।
महिष्युष्ट्रीखरीगामी त्वहोरात्रेण शुद्धयति॥ १६ ॥
डामरे समरे वापि दुर्भिक्षे वा जनक्षये।
वन्दिग्राहे भयार्त्ते वा सदा स्वस्त्रीं निरीक्षयेत्॥ १७ ॥
चाण्डालैः सह सम्पर्क या नारी कुरुते ततः।
विप्रान् दश वरान् गत्वा स्वकं दोषं प्रकाशयेत्॥ १८ ॥
आकण्ठसम्मिते कूपे गोमयोदकर्दमे।
तत्र स्थित्वा निराहारा त्वेकरात्रेण निष्क्रमेत्॥ १९ ॥
सशिखं वपनं कृत्वा भुञ्जीत्याद्यावकौदनम्।
त्रिरात्रमुपवासित्वा ह्येकरात्रं जलं वसेत्॥ २० ॥
शङ्खपुष्पीलतामूलं पत्रञ्च कुसुमं फलम्।
सुवर्ण पञ्चगव्यञ्च काथयित्वा पिवेज्जलम्॥ २१ ॥

एकभक्तं चरेत पञ्चाद्यावत् पुष्पवती भवेत्।
व्रतं चरति तद्यावत्तावत् संवसते वहिः ॥ २२ ॥
प्रायश्चित्ते ततश्चीर्णे कुर्य्याद्ब्राह्मणभोजनम्।
गोद्वयं दक्षिणां दद्याच्छुद्धिः पाराशरोऽब्रवीत् ॥ २३ ॥
चातुर्वर्ण्यस्य नारीणां कृच्छचान्द्रायणं व्रतम्।
यथा भूमिस्तथा नारी तस्मात्त न तु दूषयेत् ॥ २४ ॥
वन्दिग्राहेण या भुक्त्वा हत्वा बद्धा बलाद्भयात्।
कृत्वा सान्तपनं कृच्छ्रं शुद्धेत् पाराशरोऽब्रवीत् ॥ २५ ॥
सकृद्भुक्ता तु या नारी नेच्छन्ती पापकर्मभिः।
प्राजापत्येन शुद्धयेत ऋतुप्रस्त्रवणेन तु ॥ २६ ॥
पतत्यर्द्धशरीरस्य यस्य भार्य्या सुरां पिवेत्।
पतितार्द्धशरीरस्य निष्कृतिर्न विधीयते ॥ २७ ॥
गायत्रीं जपमानस्तु कृच्छ्रं सान्तपनं चरेत् ॥ २८ ॥
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्।
एकरात्रयुपवासश्च कृच्छ्रं सान्तपनं स्मृतम् ॥ २९ ॥
जारेण जनयेद्गर्भं गते त्यक्ते मृते पतौ.
तां त्यजेदपरे राष्ट्रे पतितां पापकारिणीम् ॥ ३० ॥
ब्राह्मणी तु यदा गच्छेत् परपुंसा समन्विता।
सा तु नष्टा विनिर्दिर्दष्टा न तस्यां गमनं पुनः ॥ ३१ ॥
कामान्मोहाद्यदागच्छेत्यक्तवा बन्धून् सुतान् पतिम्।
सा तु नष्टा परे लोके मानुषेषु विशेषतः ॥ ३२ ॥
दशमे तु दिने प्राप्ते प्रायश्चित्तं न विद्यते।
दशाहं न त्यजेन्नारी त्यजेन्नष्टश्रुता तथा ॥ ३३ ॥
भर्त्ता चैव चरेत् कृच्छ्रे कृच्छ्रार्द्धं चैव बान्धवाः।
तेषां भुक्तवा च पीत्वा च अहोरात्रेण शुद्धयति ॥ ३४ ॥

ब्राह्मणी तु यदा गच्छेत् परपुंसा विवर्जिता।
गत्वा पुंसां शतं याति त्यजेयु स्तान्तु गोत्रिणः ॥ ३५ ॥
पुंसो यदि गृहं गच्छेत्तदशुद्धं गृहं भवेत्।
पितृमातृगृहं यच्च जारस्यैव तु तद्गृहम् ॥ ३६ ॥
उल्लिख्य तद्गृहं पश्चात् पञ्चगव्येन शुद्ध्यति।
त्यजेन्मृण्मयपात्राणि वस्त्रं काष्ठञ्च शोधयेत् ॥ ३७ ॥
सम्भारान् शोधयेत् सर्वान् गोकेशैश्च फलोद्भवान्।
ताम्राणि पञ्चगव्येन कांस्यानि दश भस्मभिः ॥ ३८ ॥
प्रायश्चित्तं चरेद्विप्रो ब्राह्मणै रुपपादितम्।
गोद्वयं दक्षिणां दद्यात् प्राजापत्यं समाचरेत् ॥ ३९ ॥
इतरेषा महोरात्रं पञ्चगव्येन शोधनम्।
सपुत्रः सह भृत्यश्च कुर्याद् ब्राह्मणभोजनम् ॥ ४० ॥
आकाशं वायुरग्निश्च मेध्यं भूमिगतं जलम्।
न दुष्यन्तीह दर्भाश्च यज्ञेषु च समास्तथा ॥ ४१ ॥
उपवासैर्व्रतैः पुण्यैः स्नानसन्ध्यार्च्चनादिभिः।
जपैर्होमैस्तथा दानैः शुद्ध्यन्ते ब्राह्मणा सदा ॥ ४२ ॥

इति पाराशरे धर्मशास्त्रे दशमोऽध्यायः।

## ॥ एकादशोऽध्यायः ॥

अभक्ष्यभक्षणप्रायश्चित्तवर्णनम्।

अमेध्यरेतोगोमांसं चाण्डालान्नमथापिवा।
यदि भुक्तन्तु विप्रेण कृच्छ्रं चान्द्रायणचरेत्॥ १ ॥
तथैव क्षत्रियो वैश्य स्तदर्द्धन्तु समाचरेत्।
शूद्रोऽप्येवं यदा भुङ्क्ते प्राजापत्यं समाचरेत्॥ २ ॥
पञ्चगव्यं पिवेच्छूद्रो ब्रह्मकूर्च्चं पिवेद्द्विजः।
एकद्वित्रिचतुर्गाश्च दद्याद्विप्रादनुक्रमात्॥ ३ ॥
शूद्रान्नं सूतकस्यान्न मभोज्यस्यान्नमेव च।
शङ्कितं प्रतिषिद्धान्नं पूर्वोच्छिष्टं तथैव च ॥ ४ ॥
यदि भुक्तन्तु विप्रेण अज्ञानादापदापि वा।
ज्ञात्वा समाचरेत् कृच्छ्रं ब्रह्मकूर्च्चन्तु पावनम्॥ ५ ॥
व्यालैर्नकुलमार्जारै रन्नमुच्छिष्टितं यदा।
तिलदर्भोदकैः प्रोक्ष्य शुद्ध्यते नात्र संशयः ॥ ६ ॥
शूद्रोऽप्यभोज्यं भुक्तान्नं पञ्चगव्येन शुद्ध्यति।
क्षत्रियो वापि वैश्यश्च प्राजापत्येन शुद्ध्यति॥ ७ ॥
एकपंक्त्युपविष्टानां विप्राणां सहभोजने।
यद्येकोऽपि त्यजेत् पात्रं शेषमन्नं न भोजयेत्॥ ८ ॥
मोहाद्वा लोभतस्तत्र पंक्तावुच्छिष्टभोजने।
प्रायश्चित्तं चरेद्विप्रः कृच्छ्रं सान्तपनन्तथा॥ ९ ॥
पीयूषश्वेतलसुनवृन्ताकफलगृञ्जनम्॥ १० ॥
पलाण्डुं वृक्षनिर्य्यासं देवस्वं कवकानि च।
उष्ट्रीक्षीर मविक्षीर मज्ञानाद्भुञ्जति द्विजः॥ ११ ॥

त्रिरात्रमुपवासी स्यात् पञ्चगव्येन शुद्ध्यति ।
मण्डूकं भक्षयित्वा च मूषिकामांसमेव च ॥ १२ ॥
ज्ञात्वा विप्रस्त्वहोरात्रंयावकान्नेन शुद्ध्यति ।
क्षत्रियोवापि वैश्योवा क्रियावन्तौ शुचिव्रतौ ।
तदगृहेषु द्विजैर्भोज्यं हव्यकव्येषु नित्यशः ॥ १३ ॥
घृतं तैलं तथा क्षीरं गुडं तैलेन पाचितम् ।
गत्वा नदीतटे विप्रो भुञ्जीयाच्छुद्रभोजनम् ॥ १४ ॥
अज्ञानाद्भुञ्जते विप्राः सूतके मृतकेऽपिवा ।
प्रायश्चित्तं कथं तेषां वर्णे वर्णे विनिर्दिर्दशेत् ॥ १५ ॥
गायत्रयष्टसहस्रेण शुद्धः स्याच्छुद्रसूतके ।
वैश्ये पञ्चसहस्रेण त्रिसहस्रेण क्षत्रियः ॥ १६ ॥
ब्राह्मणस्य यदा भुङ्क्ते प्राणायामेन शुद्ध्यति ।
अथवा वामदेव्येन साम्रा चैकेन शुद्ध्यति ॥ १७ ॥
शुष्कान्नं गोरसं स्नेहं शूद्रवेश्मन आगतम् ।
पकवं विप्रगृहे पूतं भोज्यं तन्मनुरब्रवीत् ॥ १८ ॥
आपत्काले तु विप्रेण भुक्तं शूद्रगृहे यदि ।
मनस्तापेन शुद्ध्येत द्रुपदां वा शतं जपेत् ॥ १९ ॥
दासनापितगोपालकुलमित्रार्द्धसीरिणः ।
एते शूद्रेषु भोज्यान्ना यश्चात्मानं निवेदयेत् ॥ २० ॥
शूद्रकन्यासमुत्पन्नो ब्राह्मणेन तु संस्कृतः ।
संस्कृतस्तु भवेद्दास्यो ह्यसंस्कारैस्तु नः पितः ॥ २१ ॥
क्षत्रियाच्छुद्रकन्यायां समुत्पन्नस्तु यः सुतः ।
स गोपाल इतिज्ञेयो भोज्यो विप्रैर्न संशयः ॥ २२ ॥
वैश्यकन्यासमुत्पन्नो ब्राह्मणेन तु संस्कृतः ।
आर्द्धिकश्च स तु ज्ञेयो भोज्यो विप्रैर्न संशयः ॥ २३ ॥

भाण्डस्थित मभोज्येषु जलं दधि घृतं पयः ।
अकामतस्तु यो भुङ्क्ते प्रायश्चित्तं कथं भवेत् ॥ २४ ॥
ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वाप्युपसर्पति ।
ब्रह्मकूर्च्चोपवासेन यथावर्णस्य निष्कृतिः ॥ २५ ॥
शूद्राणां नोपवासः स्याच्छूद्रो दानेन शुद्धयति ।
ब्रह्मकूर्च्चमहोरात्रं श्वपाकमपि शोधयेत् ॥ २६ ॥
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
निर्दिष्टं पञ्चगव्यन्तु पवित्रं पापनाशनम् ॥ २७ ॥
गोमूत्रं कृष्णवर्णायाः श्वेताया गोमयं हरेत् ।
पयश्च ताम्रवर्णायारक्ताया दधि चोच्यते ॥ २८ ॥
कपिलाया घृतं ग्राह्यं सर्वं कापिलमेव वा ।
गोमूत्रस्य फलं दद्याद्दध्नस्त्रिपलमुच्यते ॥ २९ ॥
आज्यस्यैकपलं दद्यादङ्गुष्ठार्द्धन्तु गोमयम् ।
क्षीरं सप्तदलं दद्यात् पलमेकं कुशोदकम् ॥ ३० ॥
गायत्रयागृह्यगोमूत्रं गन्धद्वारेति गोमयम् ।
आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि ॥ ३१ ॥
तेजोऽसि शुक्रमित्याज्यं देवस्य त्वा कुशोदकम् ।
पञ्चगव्यमृचा पूतं स्थापयेदग्निसन्निधौ ॥ ३२ ॥
आपोहिष्ठेति चालोड्य मानस्तोकेति मन्त्रयेत् ।
सप्तावरास्तु ये दर्भा अच्छिन्नाग्नाः शुकत्विषः ॥ ३३ ॥
एभिरुद्धृत्य होतव्यं पञ्चगव्यं यथाविधि ।
इरावती इदं विष्णुर्मानस्तोके च शंवती ॥ ३४ ॥
एतैरुद्धृत्य होतव्यं हुतशेषं स्वयं पिवेत्
आलोड्य प्रणवेनैव निर्म्मथ्य प्रणवेन तु ।
उद्धृत्य प्रणवेनैव पिवेच्च प्रणयेन तु ॥ ३५ ॥

यत्त्वगस्थिगतं पापं देहे तिष्ठति देहिनाम्।
ब्रह्मकूर्च्चो दहेत् सर्व यथैवाग्निरिवेन्धनम्॥ ३६ ॥
पिवतः पतितं तोयं भाजने मुखनिःसृतम्।
अपेयं तद्विजानीयाद्भुक्तवा चान्द्रायणं चरेत्॥ ३७ ॥
कूपे च पतितं दृष्ट्वा श्वश्रृगालौ च मर्कटम्।
अस्थि चर्म्मादि पतितं पीत्वा मेध्या अपो द्विजः ॥ ३८ ॥
नारन्तु कूपे काकञ्च विड्वराहखरोष्ट्रकम्।
गावयं सौप्रतीकञ्च मायूरं खाड्गकं तथा॥ ३९ ॥
वैयाघ्रमार्क्षं सैहं वा कुणपं यदि मज्जति।
तड़ागस्याथ दुष्टस्य पीतं स्यादुदकं यदि॥ ४० ॥
प्रायश्चित्तं भवेत् पुंसः क्रमेणैतेन सर्वशः।
विप्रः शुद्ध्येत्त्रिरात्रेण क्षत्रियस्तु दिनद्वयात्॥ ४१ ॥
एकाहेन तु वैश्यवस्तु शूद्रो नक्तेन शुद्ध्यति॥ ४२ ॥
परपाकनिवृत्तस्य परपाकरतस्य च।
अपचस्य च भुक्तान्नं द्विजश्चान्द्रायणञ्चरेत्॥ ४३ ॥
अपचस्य च यदाने दातुश्चास्य कुतः फलम्।
दाता प्रतिग्रहीता च द्वौ तौ निरयगामिनौ॥ ४४ ॥
गृहीत्वाग्नि समारोप्य पञ्च यज्ञान्न वर्त्तयेत्।
परपाकनिवृत्तोऽसौ मुनिभिः परिकीर्त्तितः ॥ ४५ ॥
पञ्चयज्ञं स्वयं कृत्वा परान्नेनोपजीवति।
सततं प्रातरुथाय परपाकरतो हि सः ॥ ४६ ॥
गृहस्थधर्मो यो विप्रो ददाति परिवर्ज्जितः।
ऋषिभिर्धर्मतत्वज्ञैरपचः परिकीर्त्तितः ॥ ४७ ॥
युगे युगे च ये धर्मास्तेषु धर्मेषु ये द्विजाः।
तेषां निन्दा न कर्त्तव्या युगरूपा हि ब्राह्मणाः ॥ ४८ ॥

हुङ्कारं ब्राह्मणस्योक्ता त्वङ्कारञ्च गरीयसः ।
स्नात्वा तिष्ठन्नहःशेषमभिवाद्य प्रसादयेत् ॥ ४९ ॥
ताड़यित्वा तृणेनापि कण्ठे वा बध्यवासप्ता ।
विवादेनापि निर्जित्य प्रणिपत्य प्रसादयेत् ॥ ५० ॥
अवगूर्य्य त्वहोरात्रं त्रिरात्रं क्षितिपातने ।
अतिकृच्छ्रञ्च रुधिरे कृच्छ्रमन्तरशोणिते ॥ ५१ ॥
नवाहमतिकृच्छ्रं स्यात् पाणिपूरान्नाभोजनम् ।
त्रिरात्रमुपवासः स्यादति कृच्छ्रः स उच्यते ॥ ५२ ॥
सर्वेषामेव पाषानां सङ्करे समुपस्थिते ।
शतसाहस्त्रमभ्यस्तः गायत्री शोधनं परम् ॥ ५३ ॥

इति पाराशरे धर्मशास्त्रे एकादशोऽध्यायः ।

## ॥ द्वादशोऽध्यायः ॥

तत्रादौ—पुनः संस्कारादिप्रायश्चित्तवर्णनम्।

दुःस्वप्नं यदि पश्येतु वान्ते वा क्षुरकर्मणि।
मैथुने प्रेतधूमे च स्नानमेव विधीयते ॥ १ ॥

अज्ञानात् प्राप्य विण्मूत्रं सुरां वा पिवते यदि।
पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ॥ २ ॥

अजिनं मेखला दण्डो भैक्षचर्य्या व्रतानि च।
निवर्तन्ते द्विजातीनां पुनः संस्कारकर्मणि ॥ ३ ॥

स्त्रीशूद्रस्य तु शुद्ध्यर्थं प्राजापत्यं विधीयते।
पञ्चगव्यं ततः कृत्वा स्नात्वा पीत्वा विशुध्यति ॥ ४ ॥

जलाग्निपतने चैव प्रव्रज्यानाशकेषु च।
प्रत्यवसितमेतेषां कथं शुद्धिर्विधीयते ॥ ५ ॥

प्राजापत्यद्वयेनापि तीर्थाभिगमनेन च।
वृषैकादशदानेन वर्णाः शुद्ध्यन्ति ते त्रयः ॥ ६ ॥

ब्राह्मणस्य प्रवक्ष्यामि वनं गत्वा चतुष्पथम्।
सशिखं वपनं कृत्वा प्राजापत्यत्रयञ्चरेत् ॥ ७ ॥

गोद्वयं दक्षिणां दद्याच्छुद्धिः स्वामम्भुवोऽब्रवीत्।
मुच्यते तेन पानेन ब्राह्मणत्वञ्च गच्छति ॥ ८ ॥

स्नानानि पञ्च पुण्यानि कीर्त्तितानि मनीषिभिः।
आग्नेयं वारुणं ब्राह्मं वायव्यं दिव्यमेव च ॥ ९ ॥

आग्नेयं भस्मना स्नानमवगाह्य तु वारुणम् ।
आपोहिष्ठेति च ब्राह्मं वायव्यं रजसा स्मृतम् ॥ १० ॥
यत्तु सातपवर्षेण स्नानं तद्दिव्यमुच्यते ।
तत्र स्नाने तु गङ्गायां स्नातो भवति मानवः ॥ ११ ॥
स्नानार्थं विप्रमायान्तं देवाः पितृगणैः सह ।
वायुभूता हि गच्छन्ति तृषार्त्ताः सलिलार्थिनः ॥ १२ ॥
निराशास्ते निवर्त्तन्ते वस्त्रनिष्पीड़ने कृते ।
तस्मान्न पीड़येद्वस्त्रमकृत्वा पितृतर्पणम् ॥ १३ ॥
विधुनोति हि यः केशान् स्नातः प्रस्नवतोद्विजः ।
आचामेद्वा जलस्थोऽपि स बाह्यः पितृदैवतैः ॥ १४ ॥
शिरः प्रावृत्य कं बद्ध्वा मुक्तकच्छशिखोऽपिवा ।
बिना यज्ञोपवीतेन आचान्तोऽप्यशुचिर्भवेत् ॥ १५ ॥
जले स्थलस्थो नाचामेज्जलस्थश्च बहिस्थले ।
उभे स्पृष्ट्वा समाचान्त उभयत्र शुचिर्भवेत् ॥ १६ ॥
स्नात्वा पीत्वा क्षुते सुप्ते भुक्ते रथ्योपसर्पणे ।
आचान्तः पुनराचामेद्वासोविपरिधाय च ॥ १७ ॥
क्षुते निष्ठीविते चैव दन्तोच्छिष्टे तथानृते ।
पतितानाञ्च सम्भाषे दक्षिणं श्रवणं स्पृशेत् ॥ १८ ॥
ब्रह्मा विष्णुश्च रुद्रश्च सोमः सूर्य्योऽनिलस्तथा ।
ते सर्वे ह्यपि तिष्ठन्ति कर्णे विप्रस्य दक्षिणे ॥ १९ ॥
दिवाकरकरैः पूतं दिवास्नानं प्रशस्यते ।
अप्रशस्तं निशि स्नानं राहोरन्यत्र दर्शनात् ॥ २० ॥
मरुतो वसवो रुद्रा आदित्याश्चादिदेवताः ।
सर्वे सोमे विलीयन्ते तस्मात् स्नानन्तु तद्ग्रहे ॥ २१ ॥

खलयज्ञे विवाहे च संक्रान्तौ ग्रहणेषु च।
शर्वर्य्यां दानमेतेषु नान्यत्रेति विनिश्चयः ॥ २२ ॥
पुत्रजन्मनि यज्ञे च तथा चात्ययकर्मणि।
राहोश्च दर्शने दानं प्रशस्तं नान्यथा निशि ॥ २३ ॥
महानिशा तु विज्ञेया मध्यस्थप्रहरद्वयम्।
प्रदोषपश्चिमौ यामौ दिनवत् स्नानमाचरेत् ॥ २४ ॥
चैत्यवृक्षश्चितिस्थश्च चण्डालः सोमविक्रयो।
एतांस्तु ब्राह्मणः स्पृष्ट्वा सवासा जलमाविशेत् ॥ २५ ॥
अस्थिसञ्चयनात् पूर्वं रुदित्वा स्नानमाचरेत्।
अन्तर्दशाहे विप्रस्य पर्वमाचमनं भवेत् ॥ २६ ॥
सर्वं गङ्गासमं तोयं राहुग्रस्ते दिवाकरे।
सोमग्रहे तथैवोक्तं स्नानदानादिकर्मसु ॥ २७ ॥
कुशपूतन्तु यत्स्नानं कुशेनोपस्पृशेद्द्विजः।
कुशेनोद्धततोयं यत् सोमपानसमं स्मृतम् ॥ २८ ॥
अग्निकार्य्यात् परिभ्रष्टाः सन्ध्योपासनवर्जिताः।
वेदञ्चैवानधीयानाः सर्वे ते वृषलाः स्मृताः ॥ २९ ॥
तस्माद्वृषलभीतेन ब्राह्मणेन विशेषतः।
अध्येतव्योऽप्येकदेशो यदि सर्वं न शक्यते ॥ ३० ॥
शूद्रान्नरसपुष्टस्याप्यध्यीयानस्य नित्यशः।
जपतो जुड़तो वापि गतिरुक्ता न विद्यते ॥ ३१ ॥
शूद्रान्नं शूद्रसम्पर्कः शूद्रेण तु सहासनम्।
शूद्राज्ज्ञानागमञ्चापि ज्वलन्तमपि पालयेत् ॥ ३२ ॥
मृतसूतकपुटाङ्गीद्विजः शूद्रान्नभोजने।
अहं तां न विजानामि कां कां योनिं गमिष्यति ॥ ३३ ॥

गृध्रो द्वादश जन्मानि दश जन्मानि शूकरः ।
श्वयोनौ सप्तजन्म स्यादित्येवं मनुरब्रवीत् ॥ ३४ ॥
दक्षिणार्थं तु यो विप्रः शूद्रस्य जुहुयाद्धविः ।
ब्राह्मणस्तु भवेच्छुद्रः शूद्रस्तु ब्राह्मणो भवेत् ॥ ३५ ॥
मौनव्रतं समाश्रित्य आशीनो न वदेद्द्विजः ।
भुञ्जानो हि वदेद्यस्तु तदन्नं परिवर्जयेत् ॥ ३६ ॥
अर्द्धे भुक्ते तु यो विप्रस्तस्मिन् पात्रे जलं पिवेत् ।
हृतं दैवञ्च पित्रयञ्च आत्मानञ्चोपघातयेत् ॥ ३७ ॥
भाजनेषु च तिष्ठत्सु स्वस्ति कुर्वन्ति ये द्विजाः ।
न देवा स्तृप्तिमायान्ति निराशाः पितरस्तथा ॥ ३८ ॥
गृहस्थस्तु यदा युक्तो धर्ममेवानुचिन्तयेत् ।
पोष्यधर्मार्थसिद्ध्यर्थं न्यायवर्त्ती सुबुद्धिमान् ॥ ३९ ॥
न्यायोपार्जितवित्तेन कर्त्तव्यं ज्ञानरक्षणम् ।
अन्यायेन तु यो जीवेत् सर्वकर्मवहिष्कृतः ॥ ४० ॥
अग्निचित्त कपिला सत्री राजा भिक्षुर्महोदधिः ।
दृष्टमात्रं पुनन्त्येते तस्मात् पश्येत्तु नित्यशः ॥ ४१ ॥
अरणिं कृष्णमार्जारश्चन्दनं सुमणिं घृतम् ।
तिलान् कृष्णाजिनं छागं गृहे चैतानि रक्षयेत् ॥ ४२ ॥
गवा शतं सैकवृषं यत्र तिष्ठत्ययन्त्रितम् ।
तत्क्षेत्रं दशगुणितं गोचर्म परिकीर्त्तितम ॥ ४३ ॥
ब्रह्महत्यादिभिर्मर्त्यो मनोवाक्कवायकर्मजैः ।
एतद्गोचर्मदानेन मुच्यते सर्वकिल्विषैः ॥ ४४ ॥
कुटुम्बिने दरिद्राय श्रोत्रियाय विशेषतः ।
यद्दानं दीयते तस्मै तदायुर्वृद्धिकारकम् ॥ ४५ ॥

आषोड़शदिनादर्वाक् स्नानमेव रजस्वला।
अत ऊर्द्ध्व त्रिरात्रं स्यादुशना मुनिरब्रवीत्॥ ४६॥
युगं युगद्वञ्चैव त्रियुगञ्च चतुर्युगम्।
चाण्डालसूतिकोदक्यापतितानामधः क्रमात्॥ ४७॥
ततः सन्निधिमात्रेण सचैलं स्नानमाचरेत्।
स्नात्वावलोकयेत् सूर्य्यमज्ञानात् स्पशते यदि॥ ४८॥
वापीकूपतड़ागेषु ब्राह्मणो ज्ञानदुर्बलः।
तोयं पिवति वक्तत्रेण श्वयोनौ जायते ध्रुवम्॥ ४९॥
यस्तु क्रुद्ध पुमान् भार्य्यां प्रतिज्ञायाप्यगम्यताम्।
पुनरिच्छति ताङ्गन्तुं विप्रमध्ये तु श्रावयेत्॥ ५०॥
श्रान्तः क्रुद्धस्तमोभ्रान्त्या क्षुत्पिपासाभयार्द्दितः।
दानं पुण्यमकृत्वा च प्रायश्चित्तं दिनत्रयम्॥ ५१॥
उपस्पृशेत्त्रिषवणं महानद्यूपसङ्गमे।
चीर्णान्ते चैव गां दद्यद्ब्राह्मणान् भोजयेद्दश॥ ५२॥
दुराचारस्य विप्रस्य निषिद्धाचरणस्य च।
अन्नं भुक्तवा द्विजः कुर्य्याद्दिनमेकमभोजनम्॥ ५३॥
सदाचारत्य विप्रस्य तथा वेदान्तवादिनः।
भुक्तान्नं मुच्यते पापादहोरात्रन्तु वै नरः॥ ५४॥
ऊर्द्धोच्छिष्टमधोच्छिष्टमन्तरीक्षमृतौ तथा।
कृच्छ्रत्रयं प्रकुर्वीत आशौचमरणे तथा॥ ५५॥
कृच्छ्रदेव्ययुतञ्चैव प्राणायामशतत्रयम्।
पुण्यतीर्थे नार्द्रशिरः स्नानं द्वादशसंख्यया।
द्वियोजनं तीर्थयात्रा कृच्छ्रमेव प्रकल्पितम्॥ ५६॥
गृहस्थः कामतः कुर्य्याद्रेतसः सेचनं भुवि।
महस्रन्तु जपेद्देव्याः प्राणायामैस्त्रिभिः सह॥ ५७॥

चातुर्वेद्योपपन्नस्तु विधिवद्ब्रह्मघातके ।
समुद्रसेतुगमनप्रायश्चित्तं विनिर्दिशेत् ।। ५८ ।।
सेतुबन्धपथे भिक्षां चातुर्वर्ण्यात् समाचरेत् ।
वर्जयित्वा विकर्भस्थांश्छत्रोपानद्विवर्जितः ।। ५९ ।।
अहं दुष्कृतकर्मा वै महापातककारकः ।
गृहद्वारेषु तिष्ठामि भिक्षार्थी ब्रह्मघातकः ।। ६० ।।
गोकुलेषु वसेच्चैव ग्रामेषु नगरेषुच ।
तथा वनेषु तीर्थेषु नदीप्रस्रवणेषु च ।। ६१ ।।
एतेषु ख्यापयन्नेनः पुण्यं गत्वा तु सागरम् ।
दशयोजनविस्तीर्णं शतयोजनमायतम् ।। ६२ ।।
रामचन्द्रसमादिष्टं नलसञ्चयसञ्चितम् ।
सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहति ।। ६३ ।।
यजेत वाश्वमेचेन राजा तु पृथिवीपतिः ।। ६४ ।।
पुनः प्रत्यागतो वेश्म वासार्थ मुपसर्पति ।
सपुत्रः सह भृत्यैश्च कुर्य्याद्ब्राह्मणभोजनम् ।। ६५ ।।
गाश्चैवैकशतं दद्याच्चातुर्वेद्येषु दक्षिणाम् ।
ब्राह्मणानां प्रसादेन ब्रह्महा तु विमुच्यते ।। ६६ ।।
सवनस्थां स्त्रियं हत्वा ब्रह्महत्याव्रतं चरेत् ।
मद्यपश्च द्विजः कुर्य्यान्नदीं गत्वा समुद्रगाम् ।। ६७ ।।
चान्द्रायणे ततश्चीर्णे कुर्य्याद्ब्राह्मणभोजनम् ।
अनडुत्सहितां गाञ्च दद्याद्विप्रेषु दक्षिणाम् ।। ६८ ।।
अपहृत्य सुवर्णन्तु ब्राह्मणस्य ततः स्वयम् ।
गच्छेन्मुषलमादाय राजाभ्यासं बधाय तु ।। ६९ ।।
ततः शुद्धिमवाप्नोति राज्ञासौ मुक्त एव च ।
कामकारकृतं यत् स्यान्नान्यथा वधमर्हति ।। ७० ।।

आसनाच्छयनाद्यानात् सम्भाषात् सहभोजनात् ।
संक्रामति हि पापानि तैलबिन्दुरिवाम्भसि ॥ ७१ ॥
चान्द्रायणं यावकञ्च तुलापुरुष एव च ।
गवाञ्चैवानुगमनं सर्वपापप्रणाशनम् ॥ ७२ ॥
एतत् पराशरं शास्त्रं श्लोकानां शतपञ्चकम् ।
द्विनवत्या समायुक्तं धर्मशास्त्रस्य संग्रहः ॥ ७३ ॥
यथाध्ययनकर्माणि धर्मशास्त्रमिदं तथा ।
अद्येतव्यं प्रयत्नेन नियतं स्वर्गगामिना ॥ ७४ ॥
इति पाराशरे धर्मशास्त्रे द्वादशोऽध्यायः ॥

समाप्ता चैयं पराशरसंहिता ॥

ॐतत्सत् ।

ॐ तत्सद्ब्रह्मणे नमः ।

॥ अथ ॥

# देवलस्मृतिः

श्रीगणेशाय नमः ।

अथ प्रायश्चित्तवर्णनम् ।

सिन्धुतीरे सुखासीनं देवलं मुनिसत्तमम् ।

समेत्य मुनयः सर्वे इदं वचनमब्रुवन् ॥ १ ॥

भगवन्म्लेच्छनीता हि कथं शुद्धिमवाप्नुयुः ।

ब्राह्मणः क्षत्रिया वैश्याः शूद्राश्चैवानुपूर्वशः ॥ २ ॥

कथं स्नानं कथं शौचं प्रायश्चित्तं कथं भवेत् ।

किमाचारा भवेयुस्ते तदाचक्ष्य सविस्तरम् ॥ ३ ॥

देवल उवाच—

त्रिशङ्कं वर्जयेद्देशं सर्वं द्वादशयोजनम् ।

उत्तरेण महानद्या दक्षिणेन तु कीकटम् ॥ ४ ॥

प्रायश्चित्तं प्रवक्ष्यामि विस्तरेण महर्षयः ॥ ५ ॥

मृतसुते तु दासीनां पत्नीनां चानुलोमिनाम ।

स्वामितुल्यं भवेच्छौचं मृते स्वामिनि यौनिकम् ॥ ६ ॥

अपेयं येन संपीतमभक्ष्यं चापि भक्षितम् ।

म्लेच्छैर्नीतेन विप्रेण अगम्यागमनं कृतम् ॥ ७ ॥

तस्य शुद्धिं प्रवक्ष्यामि यावदेकं तु वत्सरम् ।

चान्द्रायणं तु विप्रस्य सपराकं प्रकीर्तितम् ॥ ८ ॥

पराकमेकं क्षत्त्रस्य पादकृच्छ्रेण संयुतम् ।
पराकार्धं तु वैश्यस्य शूद्रस्य दिनपञ्चकम् ॥ ९ ॥
नखलोमविहीनानां प्रायश्चित्तं प्रदापयेत् ।
चतुर्णामपि वर्णानामन्यथाऽशुद्धिरस्ति हि ॥ १० ॥
प्रायश्चित्तविहीनं तु यदा तेषां कलेवरम् ।
कर्तव्यस्तत्र संस्कारो मेखलादण्डवर्जितः ॥ ११ ॥
म्लेच्छैर्नीतेन शूद्रैर्वा हारिते दण्डमेखले ।
संस्कारप्रमुखं तस्य सर्वं कार्यं यथाविधि ॥ १२ ॥
संस्कारान्ते च विप्राणां दानं धेनुश्च दक्षिणा ।
दातव्यं शुद्धमिच्छद्भिरश्वगोभूमिकाञ्चनम् ॥ १३ ॥
तदाऽसौ तु कुटुम्बानां पङ्क्तिं प्राप्नोति नान्यथा ।
स्वभायां च यथान्यायं गच्छन्नेव विशुध्यति ॥ १४ ॥
अथ संवत्सरादूर्ध्वं म्लेच्छैर्नीतो यदा भवेत् ।
प्रायश्चित्ते तु संचीर्णे गङ्गास्नानेन शुध्यति ॥ १५ ॥
सिन्धुसौवीरसौराष्ट्रं तथा प्रत्यन्तवासिनः ।
कलिङ्गकौङ्कणान्वङ्गान्गत्वा संस्कारमर्हति ॥ १६ ॥
बलाद्दासीकृता ये च म्लेच्छचाण्डालदस्युभिः ।
अशुभं कारिताः कर्म गवादिप्राणिहिंसनम् ॥ १७ ॥
उच्छिष्टमार्जनं चव तथा तस्यैव भोजनम् ।
खरोष्ट्रविड्वराहाणामाभिषस्य च भक्षणम् ॥ १८ ॥
तत्स्त्रीणां च तथा सङ्गं ताभिश्च सह भोजनम् ।
मासोषिते द्विजातौ तु प्राजापत्यं विशोधनम् ॥ १९ ॥
चान्द्रायणं त्वाहिताग्नेः पराकस्त्वथ वा भवेत् ।
चान्द्रायणं पराकं च चरेत्संवत्सरोषितः ॥ २० ॥
संवत्सरोषितः शूद्रो मासार्धं यावकं पिबेत् ।

मासमात्रोषितः शूद्रः कृच्छ्रपादेन शुध्यति ॥ २१ ॥
ऊर्ध्वं संवत्सरात्कल्प्यं प्रायश्चित्तं द्विजोत्तमैः ।
संवत्सरैश्चतुर्भिश्च तद्भावमधिगच्छति ॥ २२ ॥
ह्रासो न विद्यते यस्य प्रायश्चित्तं दुरात्मनः ।
गुह्यकक्षशिरोभ्रूणां कर्तव्यं केशवापनम् ॥ २३ ॥
प्रायश्चित्तं समारभ्य प्रायश्चित्तं तु कारयेत् ।
स्नानं त्रिकालं कुर्वीत धौतवासा जितेन्द्रियः ॥ २४ ॥
कुशहस्तः सत्यवक्ता देवलेन ह्युदाहृतम् ।
वत्सरं वत्सरार्धं वा मासं मासार्धमेव वा ॥ २५ ॥
बलान्म्लेच्छैस्तु यो नीतस्तस्य शुद्धिस्तु कीदृशी ।
संवत्सरोषिते शूद्रे शुद्धिश्चान्द्रायणेन तु ॥ २६ ॥
पराकं वत्सरार्धे च पराकार्धं त्रिमासिके ।
मासिके पादकृच्छ्रश्च नखरोमविवर्जितः ॥ २७ ॥
पादोनं क्षत्रियस्योक्तधर्मं वैश्यस्य दापयेत् ।
प्रायश्चित्तं द्विजस्योक्तं पादं शूद्रस्य दापयेत् ॥ २८ ॥
प्रायश्चित्तावसाने तु दोग्ध्री गौर्दक्षिणा मता ।
तथाऽसौ तु कुटुबान्ते ह्युपविष्टो न दुष्यति ॥ २९ ॥
अशीतिर्यस्य वर्षाणि बालो वाऽप्यूनषोडशः ।
प्रायश्चित्तार्धमर्हन्ति स्त्रियो रोगिण एव च ॥ ३० ॥
ऊनैकादशवर्षस्य पञ्चवर्षात्परस्य च ।
प्रायश्चित्तं चरेद्भ्राता पिता वाऽन्योऽपि वर्धिता ॥ ३१ ॥
स्वयं व्रतं चरेत्सर्वमन्यथा नैव शुध्यति ।
तिलहोमं प्रकुर्वीत जपं कुर्यादतन्द्रितः ॥ ३२ ॥
संलापस्पर्शनिःश्वाससहयानासनाशनात् ।
याजनाध्यापनाद्यौनात्पापं संक्रमते नृणाम् ॥ ३३ ॥

याजनं योनिसंबन्धं स्वाध्यायं सहभोजनम् ।
कृत्वा सद्यः पतत्येव पतितेन न संशयः ॥ ३४ ॥
संवत्सरेण पतति पतितेन सहाऽऽचरन् ।
याजनासनयज्ञादि कुर्वाणः सार्वकामिकम् ॥ ३५ ॥
अतः परं प्रवक्ष्यामि प्रायश्चित्तंमिदं शुभम् ।
स्त्रीणां म्लेच्छैश्च नीतानां बलात्संवेशने कचित् ॥ ३६ ॥
ब्राह्मणी क्षत्रिधा वैश्या शूद्रा नीता यदाऽन्यत्यजैः ।
ब्राह्मणयाः कीदृशं न्याय्यं प्रायश्चित्तं विधीयते ॥ ३७ ॥
ब्राह्मणी भोजयेन्म्लेच्छमभक्ष्यं भक्षयेद्यदि ।
पराकेण ततः शुद्धिः पादेनोत्तरतोत्तरान् (दानेनोत्तरोत्तरा) ॥ ३८ ॥
न कृतं मैथुनं ताभिरभक्ष्यं नैव भक्षितम् ।
शुद्धिस्तदा त्रिरात्रेण म्लेच्छान्नेनैव भक्षिते ॥ ३९ ॥
रजस्वला यदा स्पृष्टा म्लेच्छेनान्येन वा पुनः ।
त्रिरात्रमुषिता स्नात्वा पञ्चगव्येन शुध्यति ॥ ४० ॥
स्पृष्टा रजस्वलाऽन्योन्यं ब्राह्मणी क्षत्रिया तथा ।
त्रिरात्रेण विशुद्धिः स्याद्देवलस्य वचो यथा ॥ ४१ ॥
स्पृष्टा रजस्वलाऽन्योन्यं ब्राह्मणी शूद्रजा तथा ।
पञ्चरात्रं निराहारा पञ्चगव्येन शुध्यति ॥ ४२ ॥
ब्राह्मण्यनशनं कुर्यात्क्षत्रिया स्नानमाचरेत् ।
सचैलं वैश्यजातीनां नक्तं शूद्रे विनिर्दिशेत् ॥ ४३ ॥
म्लेच्छान्नं म्लेच्छसंस्पर्शो म्लेच्छेन सह संस्थितिः ।
वत्सरं वत्सरादूर्ध्वं त्रिरात्रेण विशुध्यति ॥ ४४ ॥
म्लेच्छैर्हतानां चौरैर्वा कान्तारेषु प्रवासिनाम् ।
भुक्तवा भक्ष्यमभक्ष्यं वा क्षुधार्तेन भयेन वा ॥ ४५ ॥
पुनः प्राप्य स्वकं देशं चातुर्वर्ण्यस्य निष्कृतिः ।

कृच्छ्रमेकं चरेद्विप्रस्तदर्धं क्षत्रियश्चरेत्।
पादोनं च चरेद्वैश्यः शूद्रः पादेन शुध्यति ॥ ४६ ॥
गृहीता स्त्री बलादेव म्लेच्छैर्गुर्वीकृता यदि।
गुर्वी न शुद्धिमाप्नोति त्रिरात्रेणेतरा शुचिः ॥ ४७ ॥
योषा गर्भं विधत्ते या म्लेच्छात्कामादकामतः।
ब्राह्मणी क्षत्रिया वैश्या शूद्रा वर्णेतरा च या ॥ ४८ ॥
अभक्ष्यभक्षणं कुर्यात्तस्याः शुद्धिः कथं भवेत्।
कृच्छ्रं सांतपनं शुद्धिर्घृतैर्योनिश्च पाचनम् ॥ ४९ ॥
असवर्णेन यो गर्भः स्त्रीणां योनौ निषिच्यते।
अशुद्धा सा भवेन्नारी यावच्छल्यं न मुञ्चति ॥ ५० ॥
विनिःसृते ततः शल्ये रजसो वाऽपि दर्शने।
तदा सा शुध्यते नारी विमलं काञ्चनं यथा ॥ ५१ ॥
स गर्भो दीयतेऽन्यस्मै स्वयं ग्राह्यो न कर्हिचित्।
स्वजातौ वजयेद्यस्मात्संकरः स्यादतोऽन्यथा ॥ ५२ ॥
गृहीतो यो बलान्म्लेच्छैः पञ्च षट् सप्त वा समाः।
दशादि विंशतिं यावत्तस्य शुद्धिर्विधीयते ॥ ५३ ॥
प्राजापत्यद्वयं तस्य शुद्धिरेषा विधीयते।
अतः परं नास्ति शुद्धिः कृच्छ्रमेव सहोषिते ॥ ५४ ॥
म्लेच्छैः सहोषितो यस्तु पञ्चप्रभृति विंशतिः।
वर्षाणि शुद्धिरेषोक्ता तस्य चान्द्रायणद्वयम् ॥ ५५ ॥
कक्षागुह्यशिरः श्मश्रुभ्रूलोमपरिकृन्तनम्।
प्राहृत्य पाणिपादानां नखलोम ततः शुचिः ॥ ५६ ॥
यो दातुं न विजानाति प्रायश्चित्तं द्विजोत्तमः।
शुद्धिं ददाति चान्यस्मै तदशुद्धेः स भोजनम् ॥ ५७ ॥

सभायां स्पर्शने चैव म्लेच्छेन सह संविशेत्।
कुर्यात्स्नानं सचैलं तु दिनमेकमभोजनम् ॥ ५८ ॥
माता म्लेच्छत्वमागच्छेत्पितरो वा कथंचन।
असूतकं च नष्टस्य देवलस्य वचो यथा ॥ ५९ ॥
मातरं च परित्यज्य पितरं च तथा सुतः।
ततः पितामहं चैव शेषपिण्डं तु निर्वपेत् ॥ ६० ॥
स्त्रीणां चैव तु शूद्राणां पतितानां तथैव च।
पञ्चगव्यं न दातव्यं दातव्यं मन्त्रवर्जितम् ॥ ६१ ॥
वरुणो देवता मूत्रे गोमये हव्यवाहनः।
सोमः क्षीरे दध्नि वायुर्घृते रविरुदाहतः ॥ ६२ ॥
गोमूत्रं ताम्रवर्णायाः श्वेतायाश्चैव गोमयम्।
पयः काञ्चनवर्णाया नीलायाश्चापि गोर्दधि ॥ ६३ ॥
घृतं वै कृष्णवर्णाया विभक्तिवर्णगोचरा।
उदकं सर्ववर्ण स्यात्कस्य वर्णो न गृह्यते ॥ ६४ ॥
षणमात्रिकं (एकमात्रं) तु गोमूत्रं गोमयं (द्विमात्रको) च कुशोदकम्।
त्रिमात्रिकं घृतं क्षीरं दधि स्याद्दशमात्रिकम् ॥ ६५ ॥
व्रते तु सर्ववर्णानां पञ्चगव्यं तु संख्यया।
प्रायश्चित्तं यथोक्तं तु दातव्यं ब्रह्मवादिभिः ॥ ६६ ॥
अन्यथा दापयेद्यस्तु प्रायश्चित्ती भवेद्द्विजः ॥ ६७ ॥
कपिलायाश्च गोर्दुग्ध्वा धारोष्णं यः पयः पिबेत्।
एष व्यासकृतः कृच्छ्रः श्वपाकमपि शोधयेत् ॥ ६८ ॥
तिलहोमं प्रकुर्वीत जपं कुर्यादतन्द्रितः।
विष्णो रराटमन्त्रेण प्रायश्चित्ती विशुध्यति ॥ ६९ ॥
बहुनाऽत्र किमुक्तेन तिलहोमो विधीयते।
तिलान्दत्त्वा तिलान्भुक्त्वा कुर्वीताघनिवारणम् ॥ ७० ॥

संपादयन्ति यद्विप्राः स्नानं तीर्थफलं तपः ।
संपादी क्रमते पापं तस्य संपद्यते फलम् ॥ ७१ ॥
प्रायश्चित्तं समाख्यातं यथोक्तं देवलेन तु ।
इतरेषामृषीणां च नान्यथा वाक्यमर्हथ ॥ ७२ ॥
सुवर्णदानं गोदानं भूमिदानं गवाह्निकम् ।
विप्रेभ्यः संप्रयच्छेत प्रायश्चित्ती विशुध्यति ॥ ७३ ॥
पञ्चाहान्सहवासेन संभाषणसहाशनैः ।
संप्राश्य पञ्चगव्यं तु दानं दत्त्वा विशुध्यति ॥ ७४ ॥
एकद्वित्रिचतुःसंख्यान्वत्सरान्संवसेद्यदि ।
म्लेच्छवासं द्विजश्रेष्ठः क्रमतो द्रव्ययोगतः ॥ ७५ ॥
एकाहेन तु गोमूत्रं व्यहेनैव तु गोभयम् ।
त्रयहात्क्षीरेण संयुक्तं चतुर्थे दधिमिश्रितम् ॥ ७६ ॥
पञ्चमे घृतसंपूर्ण पञ्चगव्यं प्रदापयेत् ।
पञ्चसप्तदशाहानि पञ्चदशाञ्च विंशतिः ॥ ७७ ॥
संवासं च प्रवक्ष्यामि देहशुद्धिं द्विजन्मनाम् ।
पञ्चाहं पञ्चगव्यं स्यात्पादकृच्छ्रं दशाहिके ॥ ७८ ॥
पराकं पञ्चदशभिर्विंशेऽतिकृच्छ्रमेव च ।
उदरं प्रविशेद्यस्य पञ्चगव्यं विधानतः ॥ ७९ ॥
यत्किंचिद्दुष्कृतं तस्य सर्वं नश्यति देहिनः ।
पञ्च सप्ताष्ट दश वा द्वादशाहोऽपि विंशतिः ।
म्लेच्छैर्नीतस्य विप्रस्य पञ्चगव्यं विशोधनम् ॥ ८० ॥
पञ्चगव्यं च गोक्षीरं दधि मूत्रं घृतं पयः ।
प्राश्यापरेऽह्न्युपवसेत्कृच्छ्रं सातपनं चरेत् ॥ ८१ ॥
पृथक्सांतपनं द्रव्यैः षडहः सोपवासकः ।
सप्ताहेन तु कृच्छ्रोऽयं महासांतपनः स्मृतम् ॥ ८२ ॥

पर्णोदुम्बरराजीवबिल्वपत्रकुशोदकैः ।
प्रत्येकं प्रत्यहं पीतैः पू(प) र्णकृच्छ्र उदाहृतः ॥ ८३ ॥
तप्तक्षीरघृताम्बूनामेकैकं प्रत्यहं पिबेत् ।
एकरात्रोपवासश्च तप्तकृच्छ्रस्तु पावनः ॥ ८४ ॥
एकभक्तेन नक्तेन तथैवायाचितेन तु ।
उपवासेन चैकेन पादकृच्छ्र उदाहृतः ॥ ८५ ॥
कृच्छ्रातिकृच्छ्रः पयसा दिवसानेकविंशतिम् ।
द्वादशाहोपवासेन पराकः परिकीर्तितः ॥ ८६ ॥
पिण्याकशाकतक्राम्बुसक्तूनां प्रतिवासरम् ।
एकरात्रोपवासश्च कृच्छ्रः सौम्यः प्रकीर्तितः ॥ ८७ ॥
एषां त्रिरात्रमभ्यासादेकैकस्य यथाक्रमम् ।
तुलापुरुष इत्येष ज्ञेयः पञ्चादशाहिकः ॥ ८८ ॥
तिथि वृद्धया चरेत्पिण्डाञ्छुक्ले शिख्यण्डसंमितान् ।
एकैकं ह्रासयेत्पिण्डान्कृच्छ्रचान्द्रायणं चरेत् ॥ ८९ ॥
यथाकथंचित्पिण्डानां चत्वारिंशच्छतद्वयम् ।
इति देवल(ल) [न] कृतं धर्मशास्त्रं प्रकीर्तितम् ॥ ९० ॥

समाप्तेयं देवलस्मृतिः

# संदर्भ ग्रन्थ-सूची

## मूल-ग्रंथ


पराशर स्मृति — हरिदास संस्कृत ग्रन्थमाला, चौखम्बा अमरभारती प्रकाशन, पो० बा० १३८, के-३७/१३०, गोपाल मन्दिर, वाराणसी, १९८३

पराशर-माधवीय — श्रीमन्माधवाचार्य कृत (आचार, व्यवहार, प्रायश्चित्त काण्ड) दि एशियाटिक सोसाइटी, १ पार्क स्ट्रीट, कलकत्ता, १९७४

देवल-स्मृति — स्मृति-सन्दर्भः (धर्मशास्त्र-संग्रहः) नाग प्रकाशक, ११-ए/यू० ए०, जवाहर नगर, दिल्ली—७, १९८८


## सहायक ग्रन्थ-सूची


अथर्ववेद संहिता — सायण भाष्य, रामचंद्र शर्मा, सनातन धर्म मंत्रालय, मुरादाबाद, १९८७

आपस्तम्ब धर्मसूत्र — हरदत्त मिश्र की उज्जवला टीका, हिन्दी अनुवादक-उमेशचन्द्र पांडेय, चौखम्बा संस्कृत सीरिज़, बनारस, १९७२

एकादशोपनिषद् भाग-२ — विजय कृष्ण लखनपाल एण्ड कम्पनी, विद्याविहार, ४ बलबीर ऐवेन्यू, देहरादून

ऐतरेय ब्राह्मण — सायण भाष्य, वैदिक संशोधन मण्डल, भाग-१ से १०, पूना, १९३६

ऋग्वेद संहिता — सायण भाष्य, वैदिक संशोधन मण्डल, भाग १ से १०, पूना, १९३६

कौटिल्य-अर्थशास्त्रम् भाग १, २, ३ — अनुवादक डा० रघुनाथ सिंह, कृष्ण दास अकादमी, वाराणसी, १९८३

गीता ज्ञान — राम कपूर (डायरेक्टर, गुरदास कपूर एंड सन्स, दिल्ली-६, १९६९

गौतम धर्मसूत्र — हरदत्त कृत मिताक्षरा वृत्ति, हिन्दी अनुवादक-उमेश चन्द्र पाण्डेय, चौखम्बा संस्कृत सीरिज़, बनारस, १९६६

गौतम स्मृति — स्मृति-सन्दर्भ : (भाग-४), नाग प्रकाशक, ११ ए/यू० ए० जवाहर नगर, दिल्ली-७, १९८८

जीमूतवाहन की संस्कृत वाङ्मय को देन — वीणा सोनी (शोध प्रबन्ध)

तैत्तिरीय-संहिता, भाग-१ — सायणाचार्य, वैदिक संशोधन मंडल, पूना, १९७०

धर्मशास्त्र का इतिहास भाग-१,२,३ — काणे, पी० वी०, अनुवादक-नौबे अर्जुन काश्यप, उत्तर-प्रदेश हिन्दी संस्थान, महात्मा गांधी मार्ग, लखनऊ, तृतीय संस्करण, १९८२

निरुक्त-विमर्श — ब्रह्ममुनि परिव्राजक अविद्यामार्तण्ट, अजमेर, १९६६

पञ्चदशी — विद्यारण्य मुनि, चौखम्बा संस्कृत प्रतिष्ठान, ३८ यू० ए०, जवाहर नगर, बंगलो रोड, दिल्ली, १९८७

पाणिनी अष्टाध्यायी — भाग १-२, मोतीलाल बनारसी दास, दिल्ली, १९६२

प्राचीन भारतीय चरित्र-कोष — (चित्राव) सिद्धेश्वर शास्त्री, भारतीय चरित्र कोश मंडल, पूना-४, १९६४

बोधायन धर्मसूत्र — गोविन्द स्वामी, हिन्दी अनुवादक उमेश चन्द्र पांडेय, चौखम्बा संस्कृत सीरिज़ बनारस, १९७२

बृहस्पति-स्मृति — के० वी० रंगास्वामी अयंगार, बड़ौदा, १९४१

ब्रह्मसूत्र — शांकर भाष्य, निर्णय सागर प्रेस, द्वितीय संस्करण, बम्बई, १९३८

भारतीय धर्मशास्त्र में शूद्रों की स्थिति — डा० निरूपण विद्यालंकार, साहित्य भंडार, सुभाष बाज़ार, मेरठ, १९७१

भारतीय दर्शन — गैरोल्ला वाचस्पति, लोक भारतीय, १५ यू ए, महात्मा गांधी मार्ग, इलाहाबाद, १९८३

भारतीय व्यक्ति-कोष — उपाध्याय, भगवत शरण, आर्य बुक डिपो, ३०, नाई वाला, करोल बाग, नई दिल्ली, १९७६

महाभारत (आदिपर्व) — पंडित राम नारायण, हनुमान प्रसाद पौद्दार, गीता प्रेस, गोरखपुर

महाभारत (शान्तिपर्व, अनु० पर्व, सभा पर्व, शल्य पर्व, कर्ण पर्व) — दामोदर सातवलेकर, स्वाध्याय मंडल, भारत मुद्रणाल्य, गुजरात, १९७८

मत्स्य-पुराण (द्वितीय-खण्ड) — हिन्दी अनुवादक-आचार्य श्रीराम शर्मा, संस्कृत संस्थान, ख्वाजा कुतुब, बरेली, १९७०

मार्कण्डेय पुराण — श्री कृष्णदास क्षेमराज, नाग प्रकाशक, ११ ए/यू० ए० जवाहर नगर, दिल्ली-७, १९८५

माधवीय-धातुवृत्ति — सायणाचार्य, प्राच्य भारती प्रकाशन, वाराणसी, १९६४

मृच्छकटिक — हिन्दी अनुवादक--डा० जगदीश चन्द्र मिश्र, चौखम्बा सुरभारती प्रकाशन, के ३७/११७, गोपाल मन्दिर लेन, पो० बा० नं० ११२९, वाराणसी, १९८५

मनुस्मृति — आचार्य जगदीशलाल शास्त्री, मोतीलाल बनारसी दास, दिल्ली, १९८३

याज्ञवल्क्य स्मृति — श्री विज्ञानेश्वर कृत मिताक्षरा व्याख्या, नाग प्रकाशक, ११ ए/ यू० ए० जवाहर नगर, दिल्ली, १९८५

विष्णु स्मृति — पं० वि० कृष्णमाचार्य, अड्यार लाइब्रेरी, मद्रास, १९६४

विष्णु-पुराण — श्री कृष्ण दास क्षेमराज, नाग प्रकाशक, ११ ए/यू० ए० जवाहर नगर, दिल्ली-७, १९८५

विवरण प्रमेय सार — विद्यारण्य-अच्युत ग्रन्थमाला कार्यालय, काशी

वीर-मित्रोदय १-२ — नित्यानन्द पर्वतीय, चौखम्बा संस्कृत सीरिज आफिस, वाराणसी, १९८७, सम्वत् १९९६

स्मृत्यर्थसार — श्रीधराचार्य, आनन्दाश्रम-ग्रन्थावली, पूना, १९४०

सांख्य-दर्शन का इतिहास — डा० उदयवीर शास्त्री, विरजानन्द वैदिक संस्थान, ज्वालापुर सहारनपुर (उत्तरप्रदेश) राष्ट्रीय संग्रहालय, नई दिल्ली, १९५०

सांख्य-योग दर्शन का जीर्णोद्धार — जोशी, हरिशंकर, चौखम्बा विद्या भवन, वाराणसी, १९६५

संस्कृत-साहित्य का संक्षिप्त इतिहास — गौरोल्ला, वाचस्पति, चौखम्बा विद्या भवन, पो० बा० ६६, वाराणसी

संस्कृत-साहित्य में कुरुक्षेत्र — डा० अमर सिंह, संजीव प्रकाशन, कुरुक्षेत्र, हरियाणा, १९८३

## अंग्रेजी


Beni Prasad — Theory of Government in Ancient India, Second Edition, Allahabad, 1968

Dharam Kosa Vyavahar-kand — Joshi Narman Shastri, Prajnapathsala Mandala, Wai, Dist., Satara, India, 1938

History of Dharma Shastra, Vol. II — Kane, P. V., Poona, 1968

Garuda-Purana — A Study — N. Gangadharana, All India Kashiraj Trust, Fort, Ramnagar, Varanasi, 1972

Naradiya-Dharmasastra — Julious Jolly, Takshila Hard bound, Delhi, 1981

Smrtichandrika Sanskar kand — Devana Bhatt, Govt. Oriental Library Sereis, Mysore, 1914

Vasisth's Dharmasastra — Fuhrer B.O.R.I., Poona, 1930

Smrti-Chandrika Vyavhar kand — Devana Bhatt, Collection of Hindu Law Text, Govt. of India, Delhi, 1940

